# चम्पूरामायणे

# बालकाण्डम्

२९ – १६.०७.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥ तृ

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- कुमारसम्भवः
  - शिवपार्वत्योः विवाहः, शिवस्य वीर्यपातः, पार्वत्याः शापः
  - भूमिः – अग्निः – गङ्गा – शरवणम्
  - तत्राभूत् कृत्तिकाप्रीत्यै
- गङ्गावतरणकथारम्भः – त्रैविध्यं श्रूयतां वत्स

## पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः।
## केशिनीसुमतिभ्यां च लङ्घितप्रथमाश्रमः॥६४॥

- पुरीम्, अयोध्याम्, अध्यास्त, सावित्रः, सगरः, नृपः, केशिनी-सुमतिभ्याम्, च, लङ्घित-प्रथम-आश्रमः
- अध्यास्त = अधिवसति स्म
- काम् अध्यास्त? पुरीम् = नगरीम्
- कां पुरीम्? अयोध्याम् = अयोध्यानाम्नीम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः।
# केशिनीसुमतिभ्यां च लङ्घितप्रथमाश्रमः॥६४॥

- कः अध्यास्त? नृपः = राजा
- किंनामा नृपः? सगरः
- कीदृशः नृपः? सावित्रः = सूर्यवंशीयः
- पुनः कीदृशः नृपः? लङ्घितप्रथमाश्रमः = ब्रह्मचर्यमतीत्य गार्हस्थ्यं प्रविष्टः
- काभ्यां लङ्घितप्रथमाश्रमः? केशिनीसुमतिभ्यां च = केशिनी-सुमति-नामिकाभ्यां पत्नीभ्याम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः।
# केशिनीसुमतिभ्यां च लङ्घितप्रथमाश्रमः॥६४॥

- अन्वयः – केशिनीसुमतिभ्यां लङ्घितप्रथमाश्रमः, सावित्रः, सगरः नृपः अयोध्यां पुरीम् अध्यास्त ।
- तात्पर्य्यम् – केशिनीसुमतिनामिकां कन्याद्वयं परिणीय गार्हस्थ्यं प्रविष्टः सगरनामकः सूर्यवंशस्य राजा अयोध्यानगरीम् अधिवसति स्म ।

# पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः।
# केशिनीसुमतिभ्यां च लङ्घितप्रथमाश्रमः॥६४॥

- अध्यास्त – अधि + "आस उपवेशने" – लङ्, प्रथम.१
- अयोध्याम् अध्यास्त – "अधिशीङ्स्थासां कर्म" – इत्यनेन अधिपूर्वकस्य आस्-धातोः योगे अधिकरणस्य कर्मसंज्ञा । अतः द्वितीयाविभक्तिः ।

अयोध्यायाम् आस्ते = अयोध्याम् अध्यास्ते / अधिशेते / अधितिष्ठति

- सावित्रः – सवितुः अपत्यम् – सवितृ + अण् (तद्धितः)
- लङ्घितप्रथमाश्रमः – प्रथमः आश्रमः । लङ्घितः प्रथमाश्रमः येन सः ।

स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम्।
भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥

- सः, पुत्रीयन्, स-पत्नीकः, तपः, तेपे, समाः, शतम्, भृगुः, प्रीत-मनाः, तस्मै, ददौ, दायाद-सम्पदम्
- तपः तेपे = तपश्चर्यां चकार
- कः तेपे? सः = सगरः
- कीदृशः सः? पुत्रीयन् = पुत्रम् इच्छन्, सपत्नीकः = पत्नीभ्यां सहितः
- कियत्कालं तेपे? शतं समाः = वर्षशतं यावत्

# स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम्।
# भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥

- ददौ = प्रायच्छत्
- कां ददौ? दायादसम्पदम् = सन्तानभाग्यम्
- कस्मै ददौ? तस्मै = सगराय
- कः ददौ? भृगुः = भृगुनामा महर्षिः
- कीदृशः भृगुः? प्रीतमनाः = सन्तुष्टचित्तः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम्।
भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥

- अन्वयः – सः पुत्रीयन् सपत्नीकः शतं समाः तपः तेपे । प्रीतमनाः भृगुः तस्मै दायादसम्पदं ददौ ।
- तात्पर्य्यम् – सगरमहाराजः पुत्रमिच्छन् पत्नीभ्यां सह वर्षशतं यावत् तपश्चचार । सन्तुष्टचित्तः भृगुः तस्मै सगराय सन्तानभाग्यं प्रायच्छत् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम्।
# भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥

- सपत्नीकः – पत्नीभ्यां सह विद्यते
- तेपे – “तप दाहे ऐश्वर्ये च” – लिट्, प्रथम.१
- समाः – आकारान्तः, स्त्री, २.३ । “संवत्सरो वत्सरोऽब्दः हायनोऽस्त्री शरत् समाः” (अमरः) । अमरमते नित्यं बहुवचनान्तः ।
- प्रीतमनाः – सकारान्तः, पुं, १.१ । प्रीतं मनः यस्य सः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम्।
# भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥

- ददौ – "डुदाञ् दाने" – लिट्, प्रथम.१
- दायादसम्पदम् – दायम् अत्ति इति दायादः । "दायादौ सुत-बान्धवौ" (अमरः) । दायादानां सम्पत्, ताम् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam-Value Education-Technology

# असमञ्जं सुतं लेभे वैदर्भी केशिनी तयोः।
# षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी॥६६॥

- असमञ्जम्, सुतम्, लेभे, वैदर्भी, केशिनी, तयोः, षष्टिम्, पुत्र-सहस्राणाम्, सुमतिः, च, यवीयसी
- लेभे = प्राप्तवती
- का लेभे? केशिनी = सगरस्य प्रथमा पत्नी
- कीदृशी केशिनी? वैदर्भी = विदर्भदेशोत्पन्ना

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# असमञ्जं सुतं लेभे वैदर्भी केशिनी तयोः।
# षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी॥६६॥

- कं लेभे? सुतम् = पुत्रम्
- कं सुतम्? असमञ्जम् = असमञ्जनामकम्
- पुनः का लेभे? सुमतिः च = सगरस्य द्वितीया भार्या
- कीदृशी सुमतिः? यवीयसी = कनीयसी
- कयोः यवीयसी? तयोः = केशिनी-सुमत्योः
- कां लेभे? पुत्रसहस्राणां षष्टिम् = ६०,००० पुत्रान्

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# असमञ्जं सुतं लेभे वैदर्भी केशिनी तयोः।
# षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी॥६६॥

- अन्वयः – वैदर्भी केशिनी असमञ्जं सुतं लेभे । तयोः यवीयसी सुमतिः च पुत्रसहस्राणां षष्टिं लेभे ।
- तात्पर्य्यम् – सगरस्य प्रथमा भार्या, विदर्भदेशोत्पन्ना केशिनी असमञ्जनामकं पुत्रं प्रसूतवती । कनीयसी भार्या सुमतिः तु ६०,००० पुत्रान् प्राप्तवती ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# असमञ्जं सुतं लेभे वैदर्भी केशिनी तयोः।
# षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी॥६६॥

- लेभे – "डुलभष् प्राप्तौ" – लिट्, प्रथम.१
- पुत्रसहस्राणाम् – पुत्राणां सहस्राणि, तेषाम्
- यवीयसी – द्वयोः अतिशयेन युवतिः – ईकारान्तः, स्त्री, १.१

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# असमञ्जसचारित्रमसमञ्जमपोह्य सः।
# आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥६७॥

- अ-समञ्जस-चारित्रम्, असमञ्जम्, अपोह्य, सः, आरब्ध-हय-मेधः, सन्, अमुञ्चत, तुरङ्गमम्
- अमुञ्चत = त्यक्तवान्
- कः अमुञ्चत? सः = सगरः
- कम् अमुञ्चत? तुरङ्गमम् = अश्वम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# असमञ्जसचारित्रमसमञ्जमपोह्य सः।
# आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥६७॥

- कथम्भूतः सन् अमुञ्चत? आरब्धहयमेधः सन् = अश्वमेधयज्ञदीक्षितः सन्
- किं कृत्वा अमुञ्चत? अपोह्य = दूरीकृत्य
- कम् अपोह्य? असमञ्जम् = केशिन्याः सुतम्
- कीदृशम् असमञ्जम्? असमञ्जसचारित्रम् = दुष्टस्वभावयुक्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

असमञ्जसचारित्रमसमञ्जमपोह्य सः।
आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥६७॥

- अन्वयः – सः असमञ्जसचारित्रम् असमञ्जम् अपोह्य आरब्धहयमेधः सन् तुरङ्गमम् अमुञ्चत ।
- तात्पर्य्यम् – सगरः दुष्टस्वभावयुक्तं सुतम् असमञ्जं दूरीकृत्य अश्वमेधयज्ञदीक्षितः सन् अश्वं दिग्विजयार्थं प्रेषयामास ।

# असमञ्जसचारित्रमसमञ्जमपोह्य सः।
# आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥६७॥

- असमञ्जसचारित्रम् – न समञ्जसम् । असमञ्जसं चारित्रं यस्य सः ।
- अपोह्य – अप+वह् – ल्यबन्ताव्ययम्
- आरब्धहयमेधः – आरब्धः हयमेधः येन सः ।
- सन्+अमुञ्चत – ङमुडागमसन्धिः
- तुरङ्गमम् – “घोटके वीति-तुरग-तुरङ्ग-अश्व-<u>तुरङ्गमाः</u>” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam -Value Education

# क्रव्यादवपुषा सोऽयमहारि हरिणा हयः।
# ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे॥६८॥

- क्रव्याद-वपुषा, सः, अयम्, अहारि, हरिणा, हयः, ततः, तम्, नष्टम्, अन्वेष्टुम्, सौमतेयाः, प्रतस्थिरे
- अहारि = अपहृतः
- कः अहारि? सः अयं हयः = सगरस्य अश्वमेधाश्वः
- केन अहारि? हरिणा = इन्द्रेण
- कीदृशेन हरिणा? क्रव्यादवपुषा = राक्षसरूपधारिणा

# क्रव्यादवपुषा सोऽयमहारि हरिणा हयः।
# ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे॥६८॥

- प्रतस्थिरे = प्रस्थितवन्तः
- कदा प्रतस्थिरे? ततः = अश्वे अपहृते सति
- के प्रतस्थिरे? सौमतेयाः = ६०,००० सुमतिपुत्राः
- किं कर्तुं प्रतस्थिरे? अन्वेष्टुम् = मार्गयितुम्
- कम् अन्वेष्टुं प्रतस्थिरे? नष्टं तम् = अदृश्यमानम् अश्वम्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# क्रव्यादवपुषा सोऽयमहारि हरिणा हयः।
# ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे॥६८॥

- अन्वयः – सोऽयं हयः क्रव्यादवपुषा हरिणा अहारि । ततः नष्टं तम् अन्वेष्टुं सौमतेयाः प्रतस्थिरे ।
- तात्पर्य्यम् – सगरस्य अश्वमेधाश्वः राक्षसवेषधारिणा इन्द्रेण अपहृतः । ततः अदृश्यमानं तम् अश्वं मार्गयितुं ६०,००० सुमतिपुत्राः प्रस्थिताः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# क्रव्यादवपुषा सोऽयमहारि हरिणा हयः।
# ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे॥६८॥

- क्रव्यादवपुषा – क्रव्यादवपुरिव वपुः यस्य सः । सकारान्तः, पुं, ३.१
- अहारि – "हृञ् हरणे" – कर्मणि लुङ्, प्रथम.१
- हरिणा – "यम-अनिल-इन्द्र-चन्द्र-अर्क-विष्णु-सिंह-अंशु-वाजिषु। शुक-अहि-कपि-भेकेषु हरिर्ना कपिले त्रिषु"
- हयः – "वाजि-वाह-अर्व-गन्धर्व-हय-सैन्धव-सप्तयः" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam -Value Education- Technology

# क्रव्यादवपुषा सोऽयमहारि हरिणा हयः।
# ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे॥६८॥

- अन्वेष्टुम् – अनु + “इष इच्छायाम्” + तुमुन्
- सौमतेयाः – सुमतेः अपत्यानि पुमांसः
- प्रतस्थिरे – प्र + “ष्ठा गतिनिवृत्तौ” – “प्र-सम्-उप-विभ्यः स्थः” इति आत्मनेपदम् – लिट्, प्रथम.३

# सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः।
# चक्रुर्झर्झरितध्वान्तं नागलोकं नखांशुभिः॥६९॥

- सर्वे, स-पर्वताम्, उर्वीम्, खनन्तः, सगर-आत्मजाः, चक्रुः, झर्झरित-ध्वान्तम्, नाग-लोकम्, नख-अंशुभिः
- चक्रुः = व्यदधुः
- के चक्रुः? सर्वे सगरात्मजाः = सगरस्य पुत्राः सकलाः
- किं चक्रुः? झर्झरितध्वान्तम् = विध्वंसितान्धकारम्
- कं झर्झरितध्वान्तं चक्रुः? नागलोकम् = पातालम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः।
# चक्रुर्झर्झरितध्वान्तं नागलोकं नखांशुभिः॥६९॥

- कैः चक्रुः? नखांशुभिः = कररुहाणां किरणैः
- किं कुर्वन्तः सगरात्मजाः? खनन्तः = अवदारयन्तः
- कां खनन्तः? उर्वीम् = पृथ्वीम्
- कीदृशीम् उर्वीम्? सपर्वताम् = शैलसहिताम्

सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः।
चक्रुर्झर्झरितध्वान्तं नागलोकं नखांशुभिः॥६९॥

- अन्वयः – सर्वे सगरात्मजाः सपर्वताम् उर्वीं खनन्तः नखांशुभिः नागलोकं झर्झरितध्वान्तं चक्रुः ।
- तात्पर्य्यम् – सगरपुत्राः अश्वान्वेषणार्थं शैलसहितां पृथ्वीम् अवदारयन्तः कररुहाणां किरणैः पातालं विध्वंसितान्धकारं व्यदधुः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः।
# चक्रुर्झर्झरितध्वान्तं नागलोकं नखांशुभिः॥६९॥

- सपर्वताम् – पर्वतेन सहिता, ताम्
- उर्वीम् – "सर्वसहा वसुमती वसुधा-उर्वी वसुन्धरा" (अमरः)
- खनन्तः – "खनु अवदारणे" + शतृ – तकारान्तः, पुं, १.३
- झर्झरितध्वान्तम् – झर्झरितः ध्वान्तः यस्य सः
- नखांशुभिः – नखानाम् अंशवः तैः । "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्", "किरणो-ऽस्र-मयूख-अंशु-गभस्ति-घृणि-रश्मयः" (अमरः)

# ते एते तपसा दीप्ते तमःस्तोमप्रमाथिनि।
# कापिले ज्वलने वीरा लेभिरे शलभोपमाम्॥७०॥

- ते, एते, तपसा, दीप्ते, तमः-स्तोम-प्रमाथिनि, कापिले, ज्वलने, वीराः, लेभिरे, शलभ-उपमाम्
- लेभिरे = प्राप्तवन्तः
- के लेभिरे? ते एते = सगरपुत्राः, वीराः = वीर्यवन्तः
- कां लेभिरे? शलभोपमाम् = पतङ्गसादृश्यम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# त एते तपसा दीप्ते तमःस्तोमप्रमाथिनि।
# कापिले ज्वलने वीरा लेभिरे शलभोपमाम्॥७०॥

- कस्मिन् शलभोपमां लेभिरे? ज्वलने = अग्नौ
- कीदृशे ज्वलने? तपसा दीप्ते, तमःस्तोमप्रमाथिनि, कापिले
- तपसा = तपःशक्त्या, दीप्ते = प्रज्वालिते
- तमःस्तोमप्रमाथिनि = अन्धकारसमूहस्य विनाशके
- कापिले = कपिलमहर्षिसम्भवे

# त एते तपसा दीप्ते तमःस्तोमप्रमाथिनि।
# कापिले ज्वलने वीरा लेभिरे शलभोपमाम्॥७०॥

- अन्वयः – ते एते वीराः तपसा दीप्ते, तमःस्तोमप्रमाथिनि, कापिले ज्वलने शलभोपमां लेभिरे ।
- तात्पर्य्यम् – वीर्यवन्तः सगरपुत्राः तपःशक्त्या प्रज्वालिते, अन्धकारसमूहस्य विनाशके, कपिलमहर्षिसम्भवे अग्नौ पतङ्गसादृश्यं प्राप्तवन्तः । [कपिलस्य कोपाग्निना दग्धाः]

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

त एते तपसा दीप्ते तमःस्तोमप्रमाथिनि।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम्॥७०॥

- तमःस्तोमप्रमाथिनि – तमसः स्तोमम् । तमःस्तोमं प्रमाथयति । नकारान्तः, पुं, ७.१ ।
- ज्वलने – “कृपीटयोनिः ज्वलनः जातवेदाः तनूनपात्” (अमरः)
- शलभोपमा – शलभस्य उपमा, ताम् । “समौ पतङ्ग-शलभौ” (अमरः)

# सङ्क्षेपः

- गङ्गावतरणम्
  - सगरः – केशिनी, सुमतिः
  - तपसा दायादसम्पदं प्राप – केशिन्याः सुतः असमञ्जः, सुमत्याः ६०,००० पुत्राः
  - अश्वमेधः – अश्वः इन्द्रेण अपहृतः
  - अश्वमन्विष्यन्तः सगरपुत्राः पृथ्वीं खनन्तः पातालं प्राप्तवन्तः
  - तत्र कपिलस्य कोपाग्निना दग्धाः सागराः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in